दिता कमितारमवोचत । स च विमलविवेकधनोऽपि नियतिपाशयन्त्रितः कराम्बुजकरम्बितकोदण्डकाण्डः शनकैरपयान्तमेनं मृगमन्वयासीत् । प्रतिक्षणमङ्गुलिषङ्गमिवाप्नुवता पुनरपयता च तेन दवीयांसमध्वानं नीयमानो रघूत्तमो निशातमतिरग्राह्यतया निग्राह्यमेव मन्वानस्तस्मै कोमलकराङ्गुलिनखमयूखशारितपुङ्खं विशिखोत्तमं विससर्ज ।

विष्फारश्रवणसमकालमेव 'हा वत्स लक्ष्मण हतोऽस्मि' इति राघवसदृशस्वरामुच्चतरां गिरमुच्चारयन् , स चापि दुर्मतिरिषुनिपातवेदनोदयप्रत्यापन्नप्रत्यभिज्ञायमानानिजमूर्तिरपगतासुरधिवसुधमपप्तत् । आशामुखान्यश्नुवानया चानया मारीचवाचा व्याकुलीकृतहृदया पत्युरेवापायमात्मना निश्चिन्वाना जानकी संजातहृदयकम्पम् अवगतरघुवीरविक्रमम् अप्रतिष्ठासमानम् आत्मरक्षणनियुक्तं सुमित्रापुत्रं तादृक्षैर्वाकूछल्यैर्निरागसं निस्ततक्ष, यानि समाकर्णयतः कर्णयुगलादप्यसौ चिरं जुगुप्सांचक्रे ।

तस्मिन्नपि धृतधन्वन्यार्तवचनसूत्रितामाशां प्रस्थिते चपलतरमुपकण्ठवर्ती दशकण्ठः परिगृहीतपरमहंसवेषः स्फुटघटितोर्ध्वपुण्ड्रदन्तुरललाटतटः करकलितरुद्राक्षमालाभ-

द्राणि भगवन्नामान्युच्चैरुच्चारयन् कौक्कुटिको जम्बूको जानकीनिकटमढौकिष्ट। विधिवदपचितः तामाकलितसंलापाम् अनानुलोमिकीम् आर्यहृत्ह्लम् अनार्यमतिरवनिपालतनयामात्मरथमारोप्य दशरथात्मजपथदीयमानविंशतिविलोचनप्रभासन्तानसीमन्तितवियदन्तरो भयपलायमानवैमानिकेन पथा निजनिलयाय प्रतिष्ठते स्म ।

वियत्पदविसृत्वरविदेहतनयाविलापसमाकृष्टेनात्यन्तरुष्टेन विपुलपत्रविस्तारस्थगितदिनकरेण जवजितवायुना जटायुना च साटोपमरुध्यत । तं च चञ्चुकोटिशतकोटिप्रहारसंचूर्णितसकलरथावयवमुग्रतरनखरनिकरविदारितवक्षस्तटक्षरितक्षतजलहरीशारीकृतगहनमण्डलः प्रचण्डचन्द्रहासमण्डलाग्रखण्डितपतत्रं पत्ररथसार्वभौममुर्वरायामवपात्य पत्रान्तराधिरूढो निस्तीर्णसरित्पतिः रक्षःपतिः प्रातिकूलिकीं पृथिवीनाथतनयां लङ्कापुरमङ्गलालङ्क्रियायामशोकवनिकायां तत्प्रसादप्रतीक्षश्चिराय निवेशयामास । सा च निशाचरेन्द्रनिर्दिष्टाभिरुग्ररूपाभिरनेकाभिराशरस्त्रीभिरावृता तत्रैव भर्तृचरणाम्बुजासक्तेन मनसा कथमपि समयमगमयत् ।

रघुपतिस्तु विमथितमारीचमृगस्तद्वचनजनितशङ्काङ्कुरः

सपदि समावर्तमानो वर्तनीमध्यनिध्यातेन निगदितनिजागमननिमित्तेन विदूनमनसा कनीयसा सह प्रतिक्षणदृश्यमानदुःशकुनप्रकाशितविपत्प्रसरो विविधचिन्तातरङ्गभङ्गुरधैर्यसारः सातङ्कभारमाश्रमाभ्यन्तरमविक्षत् । जनकतनयानवेक्षणक्षणसंधुक्षितदुःखभरप्रत्यवसितधैर्यसारः स्खलितचरणकमलम् अनर्गलनिष्पातुकबाष्परयगद्गदिकार्धकवलितमुष्टवर्णविलापवचनम् अविदितावस्थामात्मदयितामन्विच्छन् अवरजसहायो महारण्येषु परिबभ्राम । ऐक्षिष्ट च क्षपाचारितरवारिदारितपक्षर्तिं प्रत्यासन्नमृत्युं गृध्रराजम् । निगदितजनकनन्दनाहरणोदन्ते च प्रसारितचञ्चुपुटनिर्दिश्यमानदाशि संस्थिते तत्र तातमित्राय स्वकार्यमात्रपरित्यक्तगात्राय च कृपायमाणस्तस्मै विहितपारलौकिककृत्यो मृगयमाणो दयितामामितपाषाणकण्टकदुरवगाहेन गहनमार्गेण दक्षिणां दिशं प्रति संचरते स्म ।

विदूरपथसंचारिणौ विषमविपिनकण्टकमुखविलिख्यमानमुग्धगात्रौ नरेन्द्रपुत्रौ सुत्रामशस्त्रसंपादितकबन्धीभावः कबन्धाभिधानो यातुधानो बबन्ध द्राघिष्ठेन द्रढिष्ठेन भुजयुगलेन। स तु वधविधूतमुनिशापः स्वामेव दैवीं प्रकृतिमवापितो

विदितविश्ववृत्ताश्चित्रीयमाणं रामभद्रमुचितादरमवदत् —'अयि निरवधिप्रभाव रघुवीर मा विषीदः। अतुलबाहुबलेन वालिना निजराज्यतो निष्कासितं निष्ठुरप्रवेष्टनिष्पिष्टसैरिभाकारदुन्दुभिमहासुरस्रुतास्रपृषितदूषिताश्रमावलोकरूषितमतङ्गमुनिपुङ्गवशापात्तदगम्यमृश्यमूकाद्रिमधिवसन्तं हनूमत्प्रभृतिभिरनूनापदानैरुत्तमामात्यैः परिवृतं मित्रीयन्तं मित्रतनयं वानराग्रीयं सुग्रीवमवलोकस्व । ततो नातिचिरादभिमतं लप्स्यसे' इति।

तदुपदिष्टेन पथा प्रयातौ तौ मतङ्गवनशरणया श्रमणया शबर्या संपादितसपर्यौ पम्पापर्यन्तविपिनं परिष्कुर्वाणावाकारानुमेयदुरभिभावौ दूरादेव विलोकयन्नचलाप्रवासी सुग्रीवः सहसा विपक्षपक्षधिया सुतरां बिभाय । प्राहिणोच्च याथातथ्यविविदिषया तदुपान्तं प्रति प्रभञ्जनतनयमहितपुञ्जभञ्जनमाञ्जनेयं मतिमन्तं हनूमन्तम् ।

स च सुनिमित्तसम्पातसंभावितकार्यसिद्धिः तरसैव तयोः समीपमुपगम्य विहिताञ्जलिरञ्जसा निवेदितनिखिलवृत्तान्तः कथितनिजदशाविशेषौ राजपुत्रौ समादाय प्रमोदमानहृदयः शब्दविद्यादेशिकस्य द्वादशात्मनो भगवतः स्वात्मजाभ्युदय-

संपादनलक्षणामाश्रुतचरीं गुरुदक्षिणां सुविहितामेव मन्वानः सुग्रीवोपकण्ठमुपेयाय । अकथयच्च प्रणिपत्य प्रणयिने स्वामिने रामवृत्तान्तम् । अभवच्च नरवानरवीरयोरवलोकनसमय एव प्राचीनदशाविशेषोचितयोरनुपाधिकः प्रणयबन्धः । मिथः कथितनिजदुर्दशाविपाकयोरनवरतदीप्यमानशोकानलयोः समिद्धमध्यमतन्मात्रगुणकानलसाक्षिकमपि सख्यमजनिष्ट ।

उभाभ्यां च प्रणयसौरभसमग्राभ्यां रामसुग्रीवाभ्यां सुत्रामपुत्रस्य विशसने विदेहसुतायाश्च विचयने प्रतिज्ञाते सति, अप्रतिमवालिबलनित्यपर्यङ्कितस्य सख्युः प्रत्ययमुत्पादयन् प्रभुः पृथिवीधरेन्द्रगुरुणो दुन्दुभिकलेबरस्य चरणाङ्गुलिपल्लवेन दूरत उत्क्षेपणं सप्तानां च कुलाचलसामान्यपरिणाहोत्सेधानां महासालानामेकेन शिलीमुखेन विदारणमुदारचेता विदधे ।

संजातप्रत्ययप्रकर्षो वैकर्तनिरनुयुञ्जानाय सख्ये ज्यायसः स्वविषयस्य वैरानुबन्धस्य कारणं व्याचख्यौ— 'पुरा खल्वावयोरनुपाधिकसौहार्दसाक्षिणि समये प्रथमविमथितस्य दुन्दुभेः सहोदरं मन्दोदर्या रावणदाराणां दयितं भ्रातरं मयात्मजं मायाविनमाहिवाभियोगमचिरादनीकभुवः

पलायमानमनुद्रुते बलावलिप्ते वालिनि चिरायिते सति अराजके राज्ये प्रकृतिभिरनभिलाषुकमप्यभिषिक्तं मां सरभससमापतितो जिघांसुरसौ कान्दिशीकं विभ्रष्टराज्यमपहृतदारं च कृतवान्' इति।

ततश्च विश्वासितो विश्ववीरेण राघवेणाश्वासितश्च हरिदश्वसुतस्तदपवादेन क्षणादेव किष्किन्धां समेत्य, सत्यसन्धे तस्मिन् सानुजपवनात्मजे तरुगहनान्तरितविग्रहे सति आरादवतिष्ठमाने, समराय वालिनं समाजुहुवे। निष्क्रान्ते पुरतो बलोत्सिक्ते वलीमुखाधिपतौ सुग्रीवेण सह प्रारभ्यमाणसमरे, तयोः समानाकारविक्रमयोर्विशेषमनवगच्छन् संशयालुः क्षणमवतस्थे। अमुक्तविशिखे तस्मिन् प्रबलतरवालिभुजकुलिशप्रहारनिष्पिष्टगात्रः पलायतैव सुग्रीवः।

अनुगतेन च रामेण प्रचोदितः पुनरप्यभिज्ञानमालाकलितविपुलग्रीवः सुग्रीवो निरस्ततारोहितोक्तिना निष्क्रान्तेन भ्रात्रा सह महद्द्वन्द्वयुद्धमकरोत्। समरोत्सवरभसप्रवर्धमानबलावलेपो वलारिसुतः क्षणात्काकुत्स्थकार्मुकनिर्मुक्तेन निर्मुक्तभुजगाकारेण शरेण विदार्यमाणविपुलवक्षस्स्थलः क्षीयमाणजीवितः क्षितावपतत्। स पुनः सहस्राक्षविश्राणितां

कार्तस्वरसहस्रपत्नमयीं बलपौरुषवर्धनीमात्मनो मालां विनयविप्रतीसारभारविनमितग्रीवस्य सुग्रीवस्य ग्रीवाभरणं विधाय नित्यलालितं च निजात्मजमङ्गदमभङ्गुरानुभावे रघुवीरे निधाय तदाननसरसिजसमर्पितनयनः परासुरासीत् ।

विभाकरात्मजस्तदनु विभोराज्ञया विहितवालिदेहनिर्हरणो नीलपवनसुतजाम्बवत्प्रभृतिभिः प्रकृतिभिर्वलीमुखसाम्राज्यपदव्यामभ्यषिच्यत । अङ्गदश्च तारातनयो युवराजश्चक्रे ।

तदा च प्रचुरघनरसगर्भनिर्भरघनाघनस्तानितसमेधितमयूरहर्षासु वर्षासु प्रवर्तमानासु, निवृत्तसञ्चारे जने, शरदागमसमयसंकेतितजनकसुतागवेषणः, सामयिकनिवासाय नवीनकुसुमसौरभीवासितककुम्मुखकदम्बकदम्बसदेशमचलकन्दरं समाश्रयति सानुजन्मनि रघुतिलके, सावितृनन्दनश्चिरविलुप्तविषयसंवेशविलोलमतिरनुपरोधमवरोधमाविशति स्म ।

विरतिमुपेयुषि क्रमेण प्रावृषि समये, विमलनिशाकरकरजालवितानितवियदि शरदि चोपगतायाम् , अनवरतमदमदनमेदुरनवनवरतविस्मर्यमाणमित्रकार्ये कपीश्वरे, दुर्विषहविरहवेदनाविदूनमानसेन दयितामार्गणधौरेयीं सुहृदः

प्रवृत्तिं प्रतीक्ष्य तदनुपलम्भसंभावितरोषावेशरूषितचेतसा ज्यायसा प्रहितो गुरुहितैकजागृविः सुमित्रापुत्रः स्मरसमरसगन्धयक्षकर्दमसुगन्धां किष्किन्धामुपजगाम ।

स हि रोषकलुषितनयनकमलावलोकजनितभयकम्पिताङ्गैः प्रतीहारैर्विरचिताञ्जलिबन्धमपसरद्भिरनिवारितस्तरसा राजभवनमेवाविक्षत् । चिरपरिवृद्धस्य च तस्य वानरेन्द्रमदोदयमहारोगस्यैक एव सौमित्रिविष्फारध्वनिः सुश्रुतोदितवपटिमोद्धुरो वृद्धाचिकित्सकः समवृतत् ।

सचिवप्रबोधितार्थः सरसतरतारासान्त्ववचनप्रशान्तरोषेण सौमित्रिणा सह महीधरगुहागृहमध्यासीनस्य प्रधानामात्यसंवृतः प्रभाकरसंभवः प्रभोः पादारविन्दयुगलमभिववन्दे । क्षणेन च नानाहरिदन्तसंप्रेषितदूतवचनसंचोदितैः आकम्पितमहीमण्डलैः आच्छादितदिवाकरकराभोगैः आपतद्भिरसंख्येयैर्वलीमुखबलैरखिलमेव रोदोविवरमापूरितमासीत् । प्रणतिप्रसादितस्य प्रकृतिमधुरात्मनः सख्युरनुज्ञया परिज्ञातसकलदेशविशेषः सुतस्त्विषांपत्युरत्युदारपराक्रमाणां कपीनामनेकानि सहस्राणि मासतमीं तिथिं प्रत्यावृत्तिसमयावधिं विधाय जनकतनयागवेषणाय प्रतिदिशं प्रेषयामास ।

ते च विमुक्ततन्द्रा वानरेन्द्रा विचित्य यथानिर्दिष्टमदृष्ट्वैव रामदारानचिरादेव न्यवर्तिषत । तत्र तु ये नयसरणिविचक्षणा दक्षिणामाशां प्रस्थिताः प्रथितभुजवीर्यसम्पदो जाम्बवदङ्गदनीलहनूमदादयस्तेऽप्यनुपलभ्यैव जानकीम् अवसन्नचेतसो विषमबिलोदरभ्रमणव्यतीतसमयाः तीक्ष्णदण्डाच्चण्डकिरणसुतादुद्विजमाना जीवने निराशा बभूवुः । तेषामचलतटभुवि प्रायोपविष्टानां नष्टचेतसां परिदेवनावसरप्रस्तूयमाने रामचरिते समाकर्णितसहोदरविपत्तिः प्रत्यासीददुष्णकराकिरणदग्धपक्षो गृध्रराजः संपातिः कन्दरोदराच्छनैर्निरक्रामत् । श्रुतवृत्ताय च तस्मै रामचरितसमाकर्णनप्ररोहणीयपक्षाय परावरज्ञः पुरातनभल्लूकचक्रवर्ती मिथः कथाशेषमकथयत् । स तु क्षणविवृद्धविस्तृतपक्षविक्षेपपवनविधूयमानगिरिकाननः समुड्डीय यामिनीचरपुरोपवनवासिनीमवलोक्य जानकीमचिरादेव समागतः प्रतीक्षमाणेभ्यः प्लवगवीरेभ्यो याथातथ्येन निवेदयामास ।

प्रमदभरसमुन्नद्धचेतसः प्रथमानमानमदाः प्रसरदुद्धतनिध्वानरुध्यमानककुभः प्लवगपरिवृढाः क्षणादेव महेन्द्रमहीधरेन्द्रप्रपातप्रस्तरविस्तारस्फालनकेलिविशीर्णवीचिमा-

लापरिष्करणां दक्षिणापांपतिप्रतीरसीमामासादयामासुः । तत्र पयोधिलङ्घनकुण्ठितप्रसरेषु वानरप्रवरेषु, द्रुहिणसुतवचनवैचित्र्यप्रत्यभिज्ञातप्रभावभूमा रघुपतिस्वहस्तसमर्पितस्फुरदभिज्ञानाङ्गुलीयमहीयमानहस्तो दुस्तरमप्यकूपारं गोष्पदीकर्तुकामः सदागतिसंभवो महेन्द्रस्य महीभृतस्तुङ्गतरं शृङ्गमधिरुह्य स्वामिनश्चरणारविन्दं मनसानुसंदधानः तरसैव समापुप्लुवे ।

खरवैरिकराम्बुजकलितकोदण्डविमुक्तः शर इव निरन्तरायगतिः, वियदध्वनि विश्रमविश्राणनसमुत्पतितं हैमवतीसहोदरं महाशैलमनुमान्य प्रभावजिज्ञासया स्पर्धावर्धितशरीरां द्विरसजननीं सुरसां च वञ्चनया परितोष्य, छायाग्राहिणीं च तोयान्तरचारिणीं निशाचरीं मायाविशेषबृंहितां सिंहिकामुग्रकरजाग्रविदारितविग्रहां विधाय, परमाचलशिखरमण्डनायमाने पश्चिमदिगङ्गनामणिकुण्डले मार्ताण्डे, निःशङ्कमानसो लङ्काद्वीपे कुणपाशनविनाशपिशुनो महोल्कादण्ड इव रोषेण ज्वलन्निव पपात । तन्निबन्धनो महान् भुवः कम्पश्चाजनि ।

ततस्तनूकृततनुर्मारुतिर्विरुन्धतीमुदक्प्रतिहारमार्गप्र-

काशितवराङ्गनाकारामनातङ्को लङ्कालक्ष्मीमाभिभूय, निशाकरमरीचिजालीकृते दिशावलये, चन्द्रमणिनिष्यन्दपेशलासु चन्द्रशालासु, चन्द्रिकावतारधौतेषु सौधेषु, मदनचपलायमानयातुधानयौवनकलितप्रसादेषु प्रासादेषु, कामोपभोगकरणरम्येषु हर्म्येषु, विविधरचनासुन्दरेष्ववरोधमन्दिरेष्वपरेषु च तेषु तेषु प्रदेशेषु, महतीं प्रयत्नपदवीमवलम्बमानोऽपि मैथिलीमनवलोक्य शोशूयमानशोकावेशमशोकवनिकायामपि विचेतुकामो विचेतीभवन्नेतदन्तरभाजो महतः शिंशपातरोः शिखरान्तराले चिन्तासंदानितमतिः क्षणं निभृतमवतस्थे। प्रदेशे च तरोरवतार्यमाणदृष्टिः आकर्णितगुणसौरभाविसंवादिनमाकृतिविशेषमाकलयन् 'अये यत्सत्यं सैवेयं प्रसन्नपावनाकृतिः प्रभोः प्राणाः' इति निशितमतिर्निश्चिकाय।

अत्रान्तरे विदेहतनयाविषयविषमशरबाधविषवेगविदूषितमतिः अलब्धनिद्रासुखो दशमुखः स्वयमपररात्रे बहलमणिदीपिकाविलसिताग्रहस्तविलासिनीजनप्रायपरिजनः स्खलितचरणविवशसंचारं तदेव शिंशपामूलमाससाद। मारुतिरपि तस्यात्यारूढरागवेगविसंस्थुलानि घनध्वानघर्घराणि बहूनि विदेहसुतायाश्चावधीरणागर्भानिर्भराणि कोकिलालापको-

मलानि मितानि वचनान्याकर्णयन्नस्पन्दमानकिसलयमासांचक्रे ।

अपयाते पुनरस्मिन्नलब्धावकाशे दशाननीविसृमर-विविधपरुषाक्षरे, तदपवादपराणां निशाचरीणामतिदारुणैर्वचोभिः अवदीर्णहृदयायास्तस्या नित्यममुक्तनिकटदेशा त्रिजटा नाम विभावरीचरी विभीषणगृह्यश्च जनः परं शरणमासीत् ।

निद्रायमाणासु पुनस्तासु, तदीयदुर्विषहदुर्वचननिशमननिर्विण्णमानसामात्मनो देहं जिहासन्तीमवेक्षमाणः तामनिलसूनुरर्कान्ववायप्रशंसामधुरैः सूनृतैर्वचोभिरापादितविस्रम्भां विधाय तरुशिखरतः शनैरवारुक्षत् । प्रणिपत्य बहुशस्तां प्रशस्तानुभावां समस्तामेव निरस्तामयां रामवार्तां सविस्तरमावेद्य स्वहस्तावस्थितमभिज्ञानाङ्गुलीयममुष्यै प्रायच्छत् । सापि विपिननिवासमलिनीकृतं तदनुष्णाभिरश्रुधाराभिः प्रक्षालयन्ती निजकुचतटीविरदनविहितापराधवायसाधमकाणीकरणोदन्तम् असंस्कारपङ्किलवेणीबन्धमलीमसं च चूडामणिमस्मै प्रत्यभिज्ञानमदिशत् ।

हनूमानपि करकलितचूडामणिः प्रणिपत्य प्रशस्य देवीं 'देवि यत्सत्यमचिरादपरिमेयवलीमुखबलपरिवारः परमकारुणि-

कः पुरीमिमामुपैष्यति दाशरथिः, प्रलयघनस्तनिततिरस्करण-समुद्धतानि आकर्णयिष्यसि प्लवगवीरगर्जितानि, चतुराननश्रवणपुटविदारणदारुणान् कर्णामृतीकरिष्यसि रघुनाथचापविस्फारान्, सुमित्रासुतशरशतपातशकलीकृतनिशाचरपिशितजेमनहर्षायमाणकङ्कामुपलप्स्यसे लङ्काम्' इति बहुधा समाश्वास्य विश्वंभरातनयां, विनयावनम्रमस्तकः तदनुमत्या ततो निर्गच्छन् उत्पुच्छयमानो विरहविच्छायितमगच्छदात्मना दाशरथिम् ।

अथ निजागमनं निशाचरनाथाय निवेदयिष्यता परिवर्धमानवपुषा पवनजनुषा रुषा भज्यमाने पुरातनसुरालयावस्कन्दसरभससमुन्मूलितानीतानल्पकल्पतरुगहने प्रमदवने, कुपितेन दशाननेन प्रहितानि जगतां विहिताहितानि तानि वीर्यमहितानि बहूनि निशितानेकप्रहरणप्रभाविराजितानि पिशिताशनसहस्राणि रणे तोरणगतेन तेन द्रुतमेव प्रत्यग्रकिसलयावमर्दमवामृद्यन्त ।

पुनरयमक्षाभिधानं च रक्षोराजकुमारमक्षामशिक्षाबलगर्वितमम्लानशोभं पुलस्त्यान्वयविषतरुप्रवालमवामृद्नात् । स एष समरविजितसहस्राक्षेण राक्षसेश्वरप्रथमसूनुना मेघनादेन विहितद्रुहिणास्त्रबन्धं कुणपाशपाशपरिकल्पितपाशबन्धासह-

तया निवृत्तमपि कार्यगत्या संभावयन् जम्भारिवैरिणो रावणस्य समीपमुपानीयत ।

अप्रमादिनस्तस्यातिमात्रप्रगल्भानि रघुराजवंशप्रशंसा-मांसलान्यात्मकुत्सादुःसहानि वचनान्यसहमानेन मानधनेन यातुधानपतिना विभीषणवचोनिवर्तितजिघांसेन 'कापेयचपलोऽयं दुर्मुखो वलीमुखपाशो निर्दग्धवालहस्तो निर्मुच्यताम्' इति निशाचरा निरदिश्यन्त

पवनात्मजस्तु स्वामिनिदेशद्विगुणितोत्साहसाहसिककुणपाशविलब्धज्वलनबहुलकीलजालजटालवालः क्षणेन परिपुच्छयमानः सकलामेव लङ्कामनलसमतिरनलसात्कृत्य कृत्यविदां प्रवरः प्रसभनिर्दह्यमानपौरजनवदनगह्वरोदरविसृमरपरिदेवननिशमनसुखायमानान्तरात्मा सुमनायमानया जनकसुतयानुमतो जवपवनक्षुभितसलिलपूरं सरिद्वल्लभमुल्ललङ्घे ।

सरसनिवेदितनिजोदन्तविस्मायिताशेषवानरवीराभिनन्दितः क्षणविलङ्घितदविष्ठमार्गो रघुनन्दनचरणारविन्दयुगलमविरलानन्दः सविनयविशेषमवनम्य सकलामेव तामात्मनः प्रवृत्तिं याथातथ्येन निवेदयामास, चूडामणिं च प्रणयप्रसारिते

कराम्बुजे समर्पयामास, मनसि चाभिज्ञानवचनम् । रघुपतिस्तु संपश्यमानसकललोकदत्तसांश्लाघिनमनन्यसुलभेन परमानन्द-तरङ्गितात्मा परिरम्भेणैनमनुजग्राह ।

अखिलकार्यतत्त्वज्ञोऽपि चिराभिलषितप्रत्युपक्रियावस-रसंप्राप्तिसम्फुल्लप्रहर्षोद्ग्रेण प्रियसुहृदा सुग्रीवेण, सुखदुःख-संविभागनिरवद्यपात्रेण सौमित्रिणा, निजमनोरथेनेव तनूमता हनूमता, नयाम्बुधिना जाम्बवता, निःशेषशाखामृगसैन्य-पालेन नीलेन चानुमोदितकर्तव्यशेषः क्षणविहितसंनाहसमग्र-सैन्यसंक्षोभदुर्भरधराभारभङ्गुरशेषाहिफणामण्डलश्चण्डतरकोद-ण्डप्रकाण्डकाण्डमण्डितभुजदण्डो दशकण्ठकण्ठकाण्डखण्डनो-त्कण्ठमानमनाः दण्डधरसनाथां ककुभमभिप्रातिष्ठत । आससाद च नातिचिरादेव सैन्यरजःप्रपञ्चजम्बालिताम्भोरम्भोनिधेरक्ष-य्यधामा दक्षिणस्य प्रचलतरङ्गमालाकलितफेनजालां वेलाम् ।

पारावारनिवेशितस्कन्धावारे च दाशरथौ संचिन्त्य-मानसागरतरणोपाये, समाकर्णिततदीयाभियोगो जनकतनया-संयोगयोगचिन्तान्तरायविधायिने दैवायैर्ष्यभयप्रसङ्गविमुखो नयापनयविचारचुञ्चुभिः सचिवैः प्रियमित्रैश्च समर्मीषदाक-म्पमानमना दशाननः सदसि मदनसन्दानितात्मा मन्त्रयांचक्रे ।

तत्र च प्रायेणायशशुल्किकेषु केषुचिन्निजवासनानुरूपमकुशलोदर्का गिरो भाषमाणेषु, दोषापेतचेता विभीषणः प्रणम्य राजानं प्रकाशितसौभ्रात्रः सविनयं विज्ञापयामास— 'आर्य अनात्मनीनानामविनीतानाममीषां वचनेषु मा स्म तिष्ठथाः । स्वयमेव च चेतसा संपश्यस्व । मन्ये दुर्वाःरदोर्वीर्यमाद्यदुद्दामखरमुखनिशाचरकुञ्जरपञ्चमुखेन सार्वलौकिकभुजबलगर्वायमाणप्लवगपतिशलभदवानलेन शब्दमात्रशेषीकृतबाहुजवर्णभार्गवविजयव्याख्यातवैभवेन नयविनयाभिरामेण रामेण वैरायितारः कथंकारं सुखायिष्यन्ते । तदधुनैव तस्य धर्मविजयिनो धर्मदारान्वितीर्य परित्रायस्व कृतान्तवदनवर्तिनक्तंचरकुलम्' इति ।

तथा भाषमाणं विभीषणमुद्भटरोषभरकषायितरूक्षतराक्षिच्छविविच्छर्दवित्रासितसभान्तरो दशकन्धरः समुज्झितसौहृदय्यो नितरां निरास्थतैव ।

सोऽपि सत्वरं समुत्थाय सत्पथसंचारचतुरैः सह चतुर्भिरमात्यैरतीत्य वियदध्वानं परिचितपवनसुतनिवेदितस्वरूपः पारेऽपांपति वर्तमानं परमकृपाकूपारं पंक्तिरथनन्दनं पारायणीकृतवान् । आकारनिरीक्षणक्षणमात्रविस्रब्धेन बुद्धि-

शालिना दाशरथिना सादरमुपसंगृहीतश्च तस्य निरुपधिकप्रणयसारभाजनमभवत् । प्रणतवत्सलस्य प्रभवतो निदेशेन प्रकृतिनिरवद्यात्मा रावणानुजः प्रचुरकौतुकप्रमोदवानरवरूथिनीकलकलमांसलितमङ्गलवादित्रविचित्रनिनादसुभगं सुमित्रापुत्रेण स्वहस्तगृहीतकनककलशसंभृताभिः सागरवारिधाराभिः लङ्कापुराधिपत्ये दत्तादरमभ्यषिच्यत ।

तदनु मनुकुलोत्तमः प्रत्यायितस्य प्रत्यग्रलङ्काधिपतेः सत्यवद्यस्य पथ्यया गिरा भागीरथ्याः पतिं प्रसादकः प्रतीरपरिकल्पिते दर्भशयने समाहितेन मनसा शिरसि विरचिताञ्जलिरुपाविक्षत् ।

तथाच दयितवियोगखेदक्लशितात्मनः पयोधितीरभुवि प्रतिशयानस्य तस्य तिसृषु वासतेयीषु व्यतीतासु, अनवरतसंक्रीडमानतुङ्गतरङ्गमालाकोलाहलवाचालितहरिन्मुखे निर्विशेषप्रतिपत्तिनिष्ठुरे सति च सरितां पत्यौ, किमपि विगलितावधाने मनसि शनैश्शनैः प्रकोपलेशः पदं चकार । हरिहयहरित्तरुणीसीमन्तशोषणमणिमण्डने मार्ताण्डमण्डले, सागरनिस्तारमात्रान्तरायं कार्यशेषं पर्यालोचयतस्तस्य तादृशं गाम्भीर्यसारमत्यक्रामदार्यहृलमाचिरादेव रोषावेशः । अजनि च

सहसैव तावदारज्यदुष्प्रतारकाद्दुर्निरीक्षनयनकोकनदम् उद्भट-भ्रुकुटिरेखाजटालफालतटम् अतिविशददशनसंदष्टरक्तरुचिरो-ष्ठपुटम् उत्कम्पशिथिलितजटाबन्धबन्धुरं शरीरम् ।

अकलितसमुत्थानश्च मार्तण्डवंशकेतुरशेषमपि सागरं विशोषयितुकामः स्फायमानभयवेपमानविस्रस्तावयवेन वानर-सैन्येन स्तिमितनिस्तलनयनमवलोक्यमानः सपदि सुमित्रासुतेन विहितप्रणाममाज्ञासमकालसमानीते विष्फारध्वानवित्रासित-विरिञ्चाण्डमण्डले धनुषि ब्रह्मास्त्राभिमन्त्रितं ब्रह्मदण्डप्रचण्डव-र्चसं तीक्ष्णतरकटाक्षच्छायाकरालितं शरोत्तमं समधत्त ।

तत्क्षणेनैव दशसु दिशासु युगपदेव प्रसरद्भिः कटुत-रझटझटारावकठोरस्फारस्फुलिङ्गभङ्गभयङ्करैः उन्मिलद्बहलधूम-वितानशबलितैः अस्त्रानलकीलजालैरुत्तप्तसकलपाथः क्वथमानप-वमानाविलुठदुत्तानितविविधसत्त्वजातसप्तसागरविस्तारम् उत्ता-लसाध्वसविध्वस्तधैर्यदह्यमानपरिभ्रमदसुरवीरदर्वीकरनिकर-हाहाकारपरिपूरितसप्तपाताललोकं निजरभसनिर्भरनिर्भिद्यमान-निखिलगन्धवहस्कन्धविशृङ्खलविषमप्रभञ्जनप्रसभविवशीभव-दूर्ध्वलोकविलोलदष्टाविंशतिकोटिविमानरम् अकालप्रलयशङ्कात-ङ्कविधुरम् अखिलमेव कमलासनाण्डकटाहवलयमासीत् ।

तदा च क्षीयमाणवारः पारावारादारादाविष्कृतदिव्यमूर्तिः आर्तिभयकम्पमानगात्रः कृताञ्जलिरुत्थाय स्वयमेव यादसां पतिः प्रभोः पादारविन्दसविधे बहुशः प्रणिपत्य प्रसाद्य निर्दिष्टसेतुबन्धसरणिर्मरुकान्तारविशोधनविनियोजितामोघतदीयसायकः सहसा तिरोबभूव ।

प्रकृतिमुपसेदुषः प्रभाकरवंशकेतोः प्रसादमधुरामाम्रामानतैरुत्तमाङ्गैरुद्वहमानैः प्रमदकलितकलकलकवलितककुबन्तरालैः कपिभिरहंप्रथमिकया हरिदन्तरेभ्यः समाह्रियमाणैरभ्रंलिहैरवनिरुहसहस्रैः, विशालैः शिलामण्डलैः, उत्तुङ्गैः शैलशृङ्गैः, वलाहाकारैर्महाशैलैरपि, अप्रमेयकौशलानुभावो विश्वकर्मात्मजो नलाभिधानो वानरयूथपतिरचिरादपांपतौ दशयोजनपरिणाहं शतयोजनायाममत्यद्भुतं सेतुमार्गमारचयामास ।

पवनसुतस्कन्धाधिरूढो दाशरथिः, तारासुतस्कन्धगतेन सुमित्रासुतेनान्वीयमानः, प्रचलदपरपारावारघोराकारेण प्रचुरविविधध्वाननिरुद्धदिक्तटेन प्लवगसैन्येन परिवृतो, विहितावधानेन विमतजनभञ्जनगदाविलसिताग्रहस्तेन विश्वस्तेन विभीषणेन प्रदर्शिताध्वा, नलसेतुना सपदि सागरं समुत्तीर्य

सुवेलशैलराजतटप्रदेशमध्यासांचक्रे । उत्तीर्णसागराणामुद्धत-भुजवीर्यसंपदां कपिवीराणामुत्कटहिक्कानादमेदुरैः आशरव-रपुटभेदननिकटनिबिरीसवर्तिनां रक्षसामट्टहासमिलितैश्च सिंह-नादैरितरेतरं व्यतिभवद्भिरभ्रगुणमयमिव त्रिभुवनमासीत् ।

तदनु मदनदूयमानमना दशाननो विशरणेयमवश्यं वश्या भविष्यतीति प्रत्यग्रवृक्णकण्ठं मायामयं रामशिरो निशाचरैः कपिबलकलकलाकर्णनसुखायमानायै जनकत-नयायै प्रदर्शयामास । तेन चातिदुःखायमानामेनां प्रकट-सौहार्दवेगा त्रिजटा तस्यास्तत्त्वं प्रत्याययन्ती प्रत्यापन्न-चेतनामतनिष्ट ।

सरभसनिरस्तनयनिपुणवृद्धामात्यमतो निशाचरपतिः सविधवर्तिनि समग्रबले सपत्ने नगररक्षायामक्षय्यवीर्यानेका-नीकपरिवृतानाशरप्रवरानादिदेश । तदा च रघुनाथोऽपि विमलमतिना विभीषणेन विज्ञापितो विरोधिपुरनिरोधने करकलितमहाशैलान् नीलमुख्यान् बहुसैन्यपरिवारान्वानर-वीरानादिश्य पुरतःप्रचलदतुलबलभरपरिचूर्णितविषमाशि-लामण्डलं सुवेलशिखरमधिरूढः तदग्रसीमाविराजमान-विशालचामीकरशिलातलमलंचकार । आलुलोके च पुरतो

गिरिशिखरसीमनि दिवमिव विजेतुमुत्प्लवमानाम् अमलकलधौतमयीम् अनेकमणिकिरणमालाजटिलां संध्यामेघसंदोहसंस्थानां दशाननराजधानीम् ।

तदवलोकनचित्रीयमाणचित्ते रघुराजपुत्रे, सवितृपुत्रः सपदि समुत्पत्य लङ्कापुरतुङ्गगोपुरवलभीनिषण्णस्य विहितविविधनियुद्धकेलिकलितबलावलेपस्य रिपोर्महितमाणिसङ्घसङ्घटितं किरीटं शिरसः समाच्छिद्य वियद्गजलङ्घनजाङ्घिकः प्रभोरुपायनीकृतवान् ।

दूत्यपदानियुक्तवृत्रारिनप्तृवचनाधिगतविमतदुश्चरितनिश्चयेन प्रोद्धतधनुर्ध्वानाविस्रंसितनक्तंचरीगर्भेण रिपुदर्पविमाथिना दाशरथिना नियुक्तैः सद्य एव वानरप्रवरैः परितो वरणवलयमधिरोहद्भिः, मर्दयद्भिरुद्यानानि, पूरयद्भिः परिखाः, पाटयद्भिः प्राकारान्, दारयद्भिर्गोपुराणि, भञ्जद्भिर्भवनानि, चूर्णयद्भिश्चन्द्रशालाः, विध्वंसयद्भिस्सौधान् अनुपलब्धपूर्वातङ्का लङ्कापुरी वाङ्मनसयोरविषयं दुरवस्थातिशयमन्वभाव्यत ।

उपचितप्रतिघातिरेककलुषिताक्षिनिवहेन रक्षसां पत्या

नित्यावलिप्तेन निर्दिष्टा हृष्टा दुष्टाशया निशाचरवीरा रथ्या-गजताश्वीयसंक्षोभवेगधूयमानधरातलाः समराय समन्ततो निर्यान्ति स्म ।

तत्र चित्रीयमाणवैमानिकावलोकितम् अलघुबलदर्पनिर्भरक्तहस्तनक्तंचरहस्तमुक्तशस्त्रशतशातितकुपितवानरं वानरवीरबाहुबलसंप्रेषितशिलातलपलाशिजातशैलपातनिष्पिष्टरुष्टनक्तंचरं विष्वग्विसारिकूलङ्कषकीलालवाहिनीसहस्रसंभेदसंवर्धमानसरिद्वल्लभं विशङ्कटकीकसपटलविपुलीकृतत्रिकूटकूटम् अभिमुखनिहतविबुधीभूतवीरवरवरणकौतूहलचपलायमानसुरलोकयौवतं शस्त्राशस्त्रि तलातलि दन्तादन्ति च संततपिशितजेमनस्थूलंभावुकसंपातिकुटुम्बकं सांपरायिकं प्रातिभयमजृम्भत ।

अचिरादपक्षीयमाणेषु क्षपाचरेषु, हर्षमाणेषु वानरबलेषु, वालितनयविमथिताद्रथादनुवियत्पथमुत्पतितो मायातिरोहितविग्रहो विक्रमैकनिधानं शक्रविजयी दशकन्धरात्मजः स्वयमात्मभुवा समर्पितैरप्रातिमधामाभिः सर्पाकारैः शरैः समरशिरसि कीलितशरीरौ दाशरथी मोहावेशविवशौ निवेशयामास । वानरचमूं महतीं शातशरजातपीडितामपेतचेतनामकरोत् । दशाननोऽपि निशमितदशरथसुतवि-

पत्तिर्जनकतनयासंवननाय सुतरां जागरामास ।

तदा च कल्पापायकालनिर्भरविजृम्भमाणमहावातसमधिकाटोपपक्षवातविक्षोभितसागरः तार्क्ष्यः तत्क्षणादेव दिवोऽवतीर्य निष्पर्यायपराक्रमौ रामलक्ष्मणौ विगलितनागबन्धौ विदधे । मूर्च्छापगमसमुत्थितसमर्थसमस्तवानरसिंहसिंहनादाकर्णनपरिक्षुभितेन दशमुखेन प्रहिता नैर्ऋतपृतनापतयो रभसवेगधूम्राक्षिमुखाः धूम्राक्षमुखाः क्रमेण समराय निर्ययुः ।

तत्र प्रमथितेषु प्रधानयातुधानवीरेषु प्रहस्तप्रमुखेषु प्रथमानरोषः प्रभुर्विभावरीचराणां स्वयमेव मुखनिवहगह्वरनिःसृतनिध्वानभेदविह्वलीकृतवलीमुखसार्थः समरभुवमवततार । स तु रणशिरसि पराक्रममाणमाक्षिगतमक्षतशक्त्या शतधृतिवितीर्णया शक्त्या विक्षतवक्षःस्थलं विदधे ।

भुवि निपतिते तस्मिन् उन्नतमन्युवेगसमाक्रान्तचेतसा रघुसिंहेन निरन्तरशरप्रकरनिकृत्तनिखिलसाधनो विदलितविकटमुकुटतटो दशमुखः कथमपि समरान्निवृत्य कान्दिशीकः स्वान्तःपुरोदरमाविशत् ।

दुर्विषहरघूद्वहसायकानुस्मरणव्यथमानचित्तो नक्तंचराधिपतिः अयुतहायनीसमार्जितदुश्चरतपोविपाकमयीं निद्रां निषेवमाणस्य निर्जरकुलविध्वंसलब्धवर्णस्य कनीयसः कुम्भकर्णस्य प्रबोधनाय प्रथितसारान्निशाचरानिरदिशत । बहुमहाचलकन्दराविरतविवृततदीयवदनघोणाकुहरोदराहमहमिकानिर्जिहाननिःश्वासानिलकल्लोलजालतूललीलानुविधायिनः तेऽपि कथमपि निद्रागारं प्रविष्टा महता प्रयत्नेनैनं गलितभूयिष्ठसंवेशमुद्रं व्यधिषत ।

उल्लङ्घितवप्रेण प्रधनभुवि विहरमाणेन तेन गोत्राचलगोत्रगात्रेण परिमृद्यमानमहाकपयः तस्यैव गहने केशश्मश्रुकानने न्यलीयन्त । स च कपिराजकररुहदशनकुलिशापहृतकर्णनासो रघुवीरशरविलूनैकैकावयवनिष्पातनिष्पिष्टानेकसत्त्वजातो मर्दयन् कपिराक्षससैन्यानि, दारयन् गिरिशिखराणि, क्षोभयन्पयोनिधिजलं, क्ष्मापयन् क्ष्मातलयं, बलशासनायुधविदलितविपुलपक्षो महान्महीधर इव पपात ।

प्रियसहजविनाशवेदनातुरमनसि विलापाविलवचसि जनयितरि, तदनुज्ञया यौवनमदोद्भवीर्यबलावज्ञातसमस्तसुरासुरा दशमुखतनया विनयानुरोधपराङ्मुखाः स्वानुरूपानेक-

परिवाराः करालशिरोमुखाः समीकाय समनह्यन्त। तेष्वप्यो-जायमानवानरवीरदावपावकशलभायितेषु तनयशोकाकुलि-तचेतसं पितरमभिवन्द्याशीर्भिरभिवर्धितः कारानिरुद्धवृद्ध-श्रवःकरचरणबन्धनशृङ्खलाखणाखणायितकलितविक्रमप्रशस्तिः शक्राजित् उत्तालशौर्यसारोऽष्मायमाणकुलपुत्रप्रायप्रभूतपरिवा-रो भूयोऽपि भूयसे जन्याय संनह्यते स्म।

स तु नितान्तवित्रासितविश्वचक्रेण महता विक्रमेण सानुप्लवौ विप्लवमानधैर्यौ रघुवंशधुर्यौ विमोह्य वैदेह्यामु-त्सुकं पितरमानन्दयामास। पौलस्त्यपरिचोदिताभिर्यातुधा-नीभिः कुबेररूप्यं पुष्पकाख्यं विमानोद्धमधिरोपितां वियता समरसीमानमवापितां पतिविपदवलोकनजनितशो-कविमोहितामकुटिलाशया त्रिजटा समाश्वासयत्।

विदितपरावरेण विधातृनन्दनेन समीरितः समीरण-सुतः सहसा तुहिनाचलसमाहृतौषधिपर्वतगतमहौषधिबलेन सर्वानपि तान्विधूतमोहान्विदधे। उत्कटरोषाभिभूतस्य वान-राधिपतेर्निर्देशेन सर्व एव वानराः सर्वाभिसारेण सर्वतः समारुह्य पुरीमशेषामनवशेषितपदार्थसार्थमग्निसाच्चक्रुः।

अपेतराक्षसामपि रक्षोमयीं नगरीं निरीक्षमाणः प्रकटरोषभीषणाकारो रावणिः सपक्षस्य विपक्षस्योज्जासयिष्यन् मायानुभावनिर्मितां मैथिलसुतां तदग्रतो निस्त्रिंशघातं निहत्य तदुपलम्भव्यामोहितेषु विमतेषु संभृतसंभारां निकुम्भिलाशालां प्राप्तः प्रबलानेकरक्षोवीररक्षितः सकलसपत्नक्षियाकरीमाभिचारक्रियामारभत । विज्ञाय च तत्प्रज्ञावतां प्रथमेन समाश्वासितराघवेण त्वरमाणेन विभीषणेन संचोदितः तत्प्रदर्शितदुरवगाहपद्धतिर्बद्धयुद्धपरिकरः सौमित्रिरनेकवलीमुखानीकपरिवृतो निकुम्भिलायामुपक्रान्तस्याभिचारविधेरन्तरायमकुरुत ।

इन्द्रजिदपि भ्रातृव्यभूयमुपेयमानाय पितृव्यायेर्ष्यन् आबद्धपरिकरः सर्वौघेन पवनतनयवाहनं सौमित्रिमभ्ययुङ्क्त ।

तयोश्च युध्यमानयोरिद्धमानयोर्व्यतिरसमानयोः काकुत्स्थपुलस्त्यान्वयैकवीरयोरविश्रान्तयोरश्रान्तयोरहस्त्रितयमत्यगात् । तथा संप्रहरन्तं संप्रहारशौण्डं मण्डोदरीसुतं समिति सुमित्रापुत्रो रघुवरानुभावसंधुक्षितौजसा बैडौजसास्त्रेण विगतजीवितमतनोत् ।

विमथितपरिपन्थिनो विबुधराजविजयिनः प्रियतन-

यस्य प्रत्यावृत्तिपथे दीयमानाशेषदृष्टिः प्रतिमुहुर्मैथिलीसमागमेन प्रत्यासीदता सुखायमानो दशाननः सहसा समापतितेभ्यः प्रत्यवयवस्रवदास्रधारापङ्किलेभ्यो रोरुद्यमानेभ्यो निशाचरेभ्यः तादृशं दैवदुर्विपाकं संशुश्राव। प्रियसुतनिधनव्याकुलीकृतचेतसस्तस्य दशभ्योऽपि वदनकन्दरेभ्यः प्रौढगद्गदिकानिरुध्यमानकण्ठस्य युगपदेव विस्पष्टवर्णाविलाः विलापवाचो विविधाः प्रादुरासन्।

निर्ययौ च सद्यः समेधमानरोषसंरम्भतिरस्कृतदुःखभारः क्षपाचरसार्वभौमः क्षणसन्नद्धसमुन्नद्धसमस्तसैन्यसंदोहसंवृतः सन् जिहीर्षुरिव समं समानि भुवनानि निष्पश्चिमप्रसराय महीयसे समरोत्सवाय स पुरस्तात्परमेण तेजसा दिवसकरमधःकुर्वाणम् अभिनवतमालदलमनोहरकान्तिम् आबद्धजटाभारभासुरोत्तमाङ्गम् अरुणसरसिजायतविलोचनम् अनीकारम्भगाढविनद्धमुग्धवल्कलवसनम् उज्ज्वलशरशरासनभासमानकरारविन्दम् आनन्दनिष्यन्दमखिललोकनयनानाम् अनङ्गमिव संगृहीततापसवेषम् अनुपमगुणैकमन्दिरं रामचन्द्रमवलोकयामास।

अचिरादेव समूलकाषं कषिते मूलबले, मध्येवर्त्ममुपरुन्धानमिन्धानकोपः सुमित्रापुत्रमर्किंपचानशक्तिः शक्त्या विचेतीकृत्य युद्धमह्राय बद्धपरिकरं रघूत्तममाससाद । सौमित्रिं च समीरणसंभवः सत्वरसमाहृतमहौषधिबलेन नीरुजं चक्रे । तदा च दशवदनवधं विधास्यमानाय युयुत्समानाय मानुषवेषतिरोहिताय विष्टरश्रवसे वृद्धश्रवा निजमेव नित्यनिरस्तदैत्यवीरमनोरथं रथोत्तममुत्तपमानमातलिकरगृहीतप्रग्रहप्रहर्षहेषमाणहरिसहस्रभास्वरं प्रजिघाय ।

अथ तयोरुपरचितसमितिकौतुकयोः इतरेतरं सरभसमापतितयोः सावित्रपुलस्त्यवंशचित्रकयोः अनिशवलयितचापविसृमरविशिखविसरविदारितावयवं विस्मयरसविस्मारितपरस्परवैरवानरनिशाचरनिकरनिर्निमेषनिरीक्षितम् अस्त्रसंपातसाध्वसदूरीभवदमरलोकमुखविगलितसाधुवादपिचण्डिलहरिन्मण्डलम् अतिचिराय समरमहः समजृम्भिष्ट ।

इत्थंकारमुद्धतभुजाटोपं युध्यमानं यातुधानेश्वरं शाश्वतिकनिरुपमधामा सवितृवंशकेतुः पैतामहमहास्त्रमहःपटलजटिलेन दिव्यशरेण विदारितकठोरवक्षःशिलाघाटमपगतजीवितमवनौ निपातयामास ।

मदसलिलधोरणीदुर्दिनायमानहरिदन्तदन्तिसंहतिबृंहितपरिबृंहितैरमरदुन्दुभिनिध्वानैरापूर्यमाणे जगति, विभीषणगृह्यैर्विभावरीचारिभिः कारोपरोधान्मुच्यमानासु बन्दिसुरसुन्दरीषु, दिव्यजनकरविमुक्तनव्यतरमन्दारकुसुमविसृमरमकरन्दशीकरासारभारिकमन्दमारुतपरिपीयमानस्वेदबिन्दुसुन्दरमुखारविन्दो मधुनिरीक्षणस्मितलवाभिनन्द्यमानप्रणमदखिलवलीमुखसैन्यकरकोरकमालिकानिबिडितानिकटदेशः क्षणमटनीविन्यस्तहस्तो विश्राम्यति स्म ।

विहितसमुचितसत्कारविसृष्टपुरुहूतसूतस्य तस्य सुमनायमानस्य जगतां पत्युः शासनेन कृतदशवदननिवापकृत्यं निस्तुषतपःशौचदयासत्यसरणिनित्याभिनिविष्टधिषणम् अपगताशेषदूषणं विभीषणमात्मनैव सुमित्रात्मजः पुण्यकृतां पुरोगश्चिराय सर्वपुण्यजनसार्वभौमपदे स्थापयामास ।

आजानविशुद्धापि निशाचरपुराचिरोषिता जानकी विवर्णजनतावर्णशङ्किनः पत्युः परुषाक्षरविक्षता विगतविशयमाशुशुक्षणिमविक्षत् । तदङ्गसङ्गपरिपूतात्मा पावकः स्वयमेव देवीमम्लानमाङ्गल्यमाल्यामाखिलकर्मसाक्षी साक्षात्कृतदिव्यपुरुषाकारः प्रवणाय रावणान्तकाय प्रायच्छत् ।

प्रमदातिरेकप्रत्यक्षीभवदमरवरवरानुभावप्रत्युज्जीवित-प्रथनप्रमितप्लवगप्रवीरः प्रभाकरवंशमौलिः निरुपमकरुणामृत-सागरो निजपादुकानियोज्यमवरजं भरतमवलोकितुमुदकण्ठत। सौहार्दसान्द्रेण सानुचरेण विभीषणेन, सकलसैन्यसंवृतेन सवितृसुतेन च समं, सुमित्रातनयजानकीपरिशोभमानपार्श्वः दशवदनवरं भुजबलविजितं जवाजितमनसं विमानतल्लजमलंकुर्वाणः सुरसरिदुल्लोललोलकनकसरोजपरागसौरभवैवधिकसमीरकिशोरविहारसुभगंभावुकेन पथा साकेतपुराय प्रतिष्ठते स्म।

शृङ्गिबेरपुरे गुहेन सङ्गतस्ततोऽपि पवनसुतवदनावगतनिजचरितेन भरतेन परितोषतरङ्गितेन सावरजेन प्रमदतरालितबहलजनतानुयातेन प्रत्युद्गम्यमानो रघुनन्दनो नन्दिग्राममलमकरोत्। अपनीतमुनिवेषः सहानुजः सप्रकृतिपौरजानपदो मनुवंशप्रसूतमहीपुरन्दरकुलराजधानीमयोध्यां संप्राप्तवान्। भक्तिभरप्रणम्यमानगुरुजनाशीर्वादाभिनन्दितं रामचन्द्रं गरिष्ठतपसो वसिष्ठप्रमुखा महर्षयः सकलजगतीवलयसाम्राज्यपदव्यामभ्यषिञ्चन्।

अभिषेकमहोत्सवोपलम्भसंभृतपरमानन्दतुन्दिलात्मानौ महात्मानौ पौलस्त्यविकर्तनात्मजौ कतिपयदिवसापगमे मही-

पतिर्महितविविधसत्कारविकस्वरप्रमोदपरिजनपरीतौ विरहासहावपि 'परिपालनलक्षणमात्मविशोधनैकप्रयोजनम् अकरणे प्रत्यवायविधायिनं स्वधर्ममनुतिष्ठतम्' इत्यत्यन्तसौहार्देन प्रयुक्तसामानि जनपदाय प्रस्थापयामास।

इति विहितविबुधकृत्यो विश्वानुजिघृक्षया गृहीतमानुषवेषो भगवानरविन्दनाभः सदारावरजः सकलमित्रपरिवृतो निसर्गनिस्तुषनिजचरितवितीर्णनिखिलभुवनानन्दः चिराय परमेण सुखेन सुतरां विरराज ॥

निशाचरतमोलीनजगदुन्मेषहेतवे ।
० ०० तेजसां निधये ० ॥

यं वासुदेवमनुरूपमवाप पुत्रं
नारायणो विमलबुद्धिरुमा तथाम्बा ।
प्राणायि तेन मनुवंशपतेः कथेयम्
आदित्यवर्मनृपतेः कृतिनो निदेशात् ॥

॥ इति रामकथा संपूर्णा ॥